ॐ नमः शिवाय ।

# आध्यात्मिकोन्नतिदर्शनम् ।

## LIGHT ON THE SPRITUAL REGENERATION


कर्त्ता

सुवर्णपदकवारजतपदकाधिगन्ता

विप्रर्षिहृषीकेशात्मज

दीनानाथ शर्मा शास्त्री गाधेय

फीरोजपुरनगर


३२६


BY

*Dinanath Sharma Shastri*

***GADHEYA***

**GOLD AND SILVER MEDALIST**

SON OF VIPRARSHI HRISHI KESH

***FIROZPUR CITY,***





| | | |
|---|---|---|
| प्रथमवार १००० | सं० १९७७ सन् १९२० | मू० ।) Price 0-4-0 |





Printed by Pandit Brahma Deva Misra at the Brahma Press Etawah.

* ओ३म् नमःशिवाय *

# आध्यात्मिकोन्नतिदर्शनम्.

# LIGHT ON THE SPIRITUAL REGENERATION

## मङ्गलाचरणम् भूमिकाच ।



Prayer & introdution

नत्वाहं परमात्मानं स्वात्मानं विनियम्य च । साङ्गामात्मोन्नतिंवच्मि परमात्मैवात्रमेगतिः ॥ १॥ विषयःकठिनःकाले कलौशिक्षास्य दुर्लभा । कठिनेदुर्लभापिस्यान्मुक्तिर्देवमेयतिः ॥ २ ॥ सिंहव्याघ्रादयोहिंस्रा दुःखदाभवहानिदा । मनुष्योऽपि तथाजाने सत्यमात्मोन्नतिंविना ॥ ३ ॥ अधिकारी च तस्यांकस्तस्मिन्केषाञ्चसंग्रहः । कादशाध्यात्मिकेतेषां कथमात्माविशिष्यते ॥ ४ ॥ आध्यात्मोन्नतेः रूपं कथमेषा विवर्धते । तत्रचावश्यकं किं किं फलञ्चास्यानरायकिम् ॥ ५ ॥ इति सर्वं विनिश्चित्य युक्त्याशास्त्रोक्तमर्मभिः । ईश्वराधारमाधाय भवोद्धारायसाध्यते ॥ ६ ॥

अध्यात्मोन्नतेरधिकारी = The candidate of the Spiritual regeneration

परमदयालुनाजगदीश्वरेण जीवानांपरमसुखायोत वा मोक्षप्राप्त्यर्थं सृष्ट्युत्पत्तिः कृता तत्परमसुखमुतमोक्षो ज्ञानाधीनः ज्ञानञ्चात्मोन्नतेराधीनमात्मात्मोन्नतिश्चाध्यात्मिकोन्नतेराधीना इत्याध्यात्मिकोन्नतिंविवक्षतोतत्रातस्यावृद्धिमीप्सुणामया तदधिकारी कः इत्यवश्यमध्यवसेयम् पूर्वम् । यतः "स्थाने च कृतो यत्नः फलवान् भवतीति," भाष्यकारोक्तदिशा निजमनोरथसाफल्यं चिकीर्षता पुरुषेण स्थानेएव यत्नः कार्य इति जरायुजाण्डजस्वेदजोद्भिज्जेषु चतुरशीति कोटिषु तदधिकारीकइति जिज्ञासायामाह-

सू० ज्ञानवत्त्वान्मनुष्यः ॥ १ ॥

Consciousness and knowledge make man a candidate for Spiritual Regeneration.

भा० मनुष्योह्याध्यात्मिकोन्नतेरधिकारी ज्ञानवत्वात् । तस्मिन् हि हेयोपादेयवस्तुज्ञानं कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशयोग्यता वास्ति यदुक्तमेकेन "आहारनिद्राभयमैथुनञ्च

सामान्यमेतत्पशुभिर्नराणाम्। ज्ञानंहितेषामधिकोविशेषो ज्ञानेनहीनापशुभिःसमानाः"॥ इति तेषां ज्ञानविशेषतां प्रतिपाद्य ज्ञानहीननिन्दया तत्र ज्ञानावश्यकता साधिता। यद्यपि हनुमन्मत्स्यकूर्मावतारफणीन्द्रप्रभृतिमनुष्यातिरिक्तेष्वपि आध्यात्मिकोन्नति ज्ञानञ्च दृश्यते ममचापि मनुष्यातिरिक्तमात्रे ज्ञानं नास्ति इति नाग्रहो न चापिम नु-ष्यातिरिक्ते ज्ञानसत्तायां कश्चिन्मत्सरस्तथापि प्राधान्येन व्यपदेशाभवन्ति इति न्यायेन मनुष्ये ज्ञानवत्त्वम् अङ्गीक्रियते तस्य चमनुष्यस्य किंलक्षणमूतस्मिंश्च केषांकेषां संग्रहः।

What is man ? How many things does he possess ?

येषां येषाञ्च मनुष्ये संग्रहस्ते किमात्मोन्नतेः साधका बाधकाश्च भवन्ति।

Do these aid him or Check him from Spiritual Regeneration?

मनुष्यः कथमाध्यात्मिकोन्नतिं कर्तुं पारयति आध्यात्मिकोन्नतिमार्गं गच्छतो मनुष्यस्य के के धूर्तरूपा—आध्यात्मिकोन्नतिरूपं किं फलञ्च किं भवति इति सर्वं विवेचनीयम् तत्राह——

सू० मनोरपत्ये ज्ञानशालिनि मनुष्ये तत्त्वेन्द्रियम-नोबुद्ध्यहङ्कारजीवात्मनां संग्रहः ॥२॥

भा० मनोरग्रे सन्ततिर्मनुष्यः। तत्र च क्षित्यप्तेजोमरुद्व्योमरूपाणि पञ्चतत्वानि। पञ्च कर्म्मेन्द्रियाणि हस्तपादपायूपस्थत्वग्रूपाणि कर्णाक्षिनासिकावाग्बुद्धिरूपाणि। च पञ्च ज्ञानेन्द्रियाणि सुखदुःखाद्युपलब्धिसाधनमिन्द्रियं, मननरूपं मनः। ज्ञानात्मिका बुद्धिः। ममतात्मिकोऽहङ्कारश्चैतन्यरूपो ज्ञानाधिष्ठानं जीवात्मा—एषु आध्यात्मिकोन्नतेः प्रधा-नपात्रं कः, अन्यानि च—तस्याः मित्राणि शत्रवः उत वा उदासीना प्रधानपात्रञ्च कथं तां कर्तुं शक्नोतीत्यपि अवश्यं ज्ञातव्यं येन तथा कृतं स्यात् इति तत्राह।

सू० शास्त्रविहितमार्गगत्या परिपूता उन्नता तत्त्वे-न्द्रियमनोबुद्ध्यहङ्कारा मित्राणि उच्छृङ्खले कुमार्गगत्या परिभ्रष्टा अकिञ्चनकरा शत्रवः उदासीनमार्गगा उदा-सीना आध्यात्मिकोन्नति प्रधानपात्रस्य जीवात्मनः ॥३॥

भा० इदानीं तत्वेन्द्रियमनोबुद्ध्यहङ्काराणां जीवात्मन आध्यात्मिकोन्नतिविषये का दशा इति दर्शयति ते तत्त्वादयः शास्त्रविहिते धर्म्ममार्गेयदिगच्छन्ति तदा पवित्री-भवन्ति प्रबलाश्च सन्तः आध्यात्मिकोन्नतिप्रधानपात्रस्य जीवात्मनो मित्रतां यान्ति। परं यदि उच्छृङ्खले पापमार्गे व्रजन्ति—तदा परिभ्रष्टाः सन्त उत वा किमपि कर्तुमक्ष-मास्ते तस्य शत्रुत्वं तत्रापद्यन्ते उदासीनमार्गसेवनादुदासीना एव तिष्ठन्ति, तथाहि यदि मनुष्यदेहस्य तत्त्वानि ब्राह्मणस्य ब्राह्मणसदृशजात्यन्तरस्य वा बलवीर्य्यजात

तया पूर्वमेव शुद्धानि अग्रे च शास्त्रविहितसात्त्विकभोजनात् गङ्गाजलादिपवित्राम्बु-पानात्, हिमालयमलयानिलादिपवित्रवायुसेवनात् देहे पवित्रतरो भवन्ति। पवित्रे च देहे स्वच्छवस्त्र धारणेन स्वच्छगृहनिवासेनेव पुरुषस्य संसारचर्यायां जीवात्मन आध्यात्मिकोन्नतिकरणेऽतिसहायो भवति। अथापि सात्त्विकभोजनात् स्वच्छजलपानात् शुद्धवायुसेवनाद्वा मनुजस्य संस्काराः शुद्धा भवन्ति-शुद्धेषु च संस्कारेषु ब्रह्मचर्य्यं सम्यक् पालयति-तेन महती शारीरिकोन्नतिः शरीरोन्नत्या च धर्म्मार्थकाममोक्षरूपचतुर्वर्गस्य साधनानि सम्यक् पालयति-यदुक्तं धर्मार्थकाममोक्षाणां प्राणाः संस्थितिहेतवः„ इति। शरीरोन्नतिविरहे च बालवृद्धातुरा किमपि कर्तुं न पारयन्ति॥

यद्वा भग्नेगृहे न सुखेन। निवसति जीवः आधारमन्तरा कथं आधेयः। विना कुड्यं कथं चित्रम्, कथञ्च रागः। भग्ने मलिने च कुडये न सम्यग्जायते रागः अथापि शरीरोन्नत्यैव शुद्धतयैव वा जायमाना रसासृङ्मांसमदोऽस्थिमज्जाशुक्राणि इन्द्रियमनोबुद्ध्यहङ्कारजीवात्मनां स्थितिस्थलानि प्रवृद्धानि दृश्यन्ते।

इति सात्त्विकभोजनादिभिर्ब्रह्मचर्य्यपालनेन शरीरोन्नतिरवश्यं करणीया "ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभ„स्तत्र सुखं निवसञ्जात्मा आध्यात्मिकोन्नतिं कर्तुं सम्यक् पारयति। एवं सात्त्विकभोजनादिभिः तत्त्वेषु पूतेषु प्रवृद्धेषु पूतानि प्रवृद्धानि इन्द्रियाणि सद्विषयेषु प्रवर्तन्ते पादौ सत्सङ्गाय धावन्ति-देवप्रदक्षिणाञ्च कुरुतः सज्जनानामभ्युत्थानाय प्रचलन्ति। करौ हरिचन्दनं देवपूजनञ्च कुरुतः। बद्धाञ्जलिना गुरुदेवर्षिपितॄन् प्रीणयतः उत गुरूणां देवर्षिपितॄणां चरणस्पर्शं कुरुतः। पायूपस्थौ यथाशास्त्रं स्वचर्यां चरतः। वाक् सूनृतां वाणीं वदति। हरिकीर्तनं करोति शास्त्राणि वाचयति कर्णौ हरिगाथां शृणुतः परमात्मभजनानान्याकर्णयतः नेत्रे महात्मनां दर्शनं विधत्तः। देवप्रतिमां हरिमन्दिराणि चावलोकयतः नासिके धूपं जिघ्रतः सत् पुष्पादीनां गन्धोपादानं कुरुतः अग्रे वक्ष्यमाणाबुद्धिश्च सत्यज्ञाने प्रवर्तते येनाध्यात्मनि जीवात्मनो महालाभः।

किन्तु कदन्नादिसेवनेन परिभ्रष्टेषु तत्त्वेषु मलिनानि परिभ्रष्टानि चेन्द्रियाणि जायन्ते व्यसनेषु प्रवर्तते पादौ व्यभिचाराय धावतः। मांसमदिरागणिकालयादीनटतः पायूपस्थौ च व्यभिचरतः त्वक् कुत्सितस्पर्शेन परिभ्रश्यति, वागनृत वदति पिशुनतां निन्दाञ्च करोति नेत्रे परस्त्रीदर्शनादि कुविषये प्रवर्तेते। कर्णौ निन्दां भ्रष्टगीतानि च शृणुतः नासिके मैरेय पूत्यमाघ्रादतः बुद्धिश्च मन्दे ज्ञाने तिष्ठति॥ तेन जीवात्मन आध्यात्मोन्नतिसिद्ध्यर्थमिन्द्रियनियमनमवश्यं कार्यम् तेषां सद्विषये प्रवृत्तिः दुर्विषयेभ्यो निवृत्तिश्च परमावश्यकी जीवात्मन अध्यात्मनि साधनभूतानामिन्द्रियाणां प्रबलाशक्तिश्च परमलाभदा।

जैसा खाओगे अन्न वैसा होगा मन्न ।

शुद्धान्नसेवनात्पुंसांमनः शुद्धं प्रजायते । कदन्नसेवनात् किन्तु मनः कुत्संगतिं व्रजेत् ॥ शुद्धं मनः सदाशास्त्रंमनुते शुभकर्म्मं च । अशुद्धन्तु मनो धीरा पापे नित्यं प्रवर्त्तते ॥

स्वच्छान्नजलवायुसेवनात् जायमानं शुद्धं मनः सदा शुभकर्म्माणि चिन्तयति सदासच्छास्त्राणि च मनुते-शास्त्रमननेन शुभकर्म्मचिन्तनेन च अस्य शक्तिरुत्तरोत्तरं वर्धते येन चेदं जीवात्मन आध्यात्मिकोन्नतिकार्येऽतिसहायतां याति-किन्तु कदन्नादिसेवनात् जायमानं कुत्सितं मनः सदा पापकर्म्माणि चिन्तयति नावलादींश्चमनुते तेनास्यशक्ति र्दिनेदिने हीयते येनजीवात्मन आध्यात्मिकोन्नतिकरणेमहती हानिः सम्पद्यते इति मनःशक्तिवृध्यर्थं सदाशुभकर्म्मचिन्तनीयम् सच्छास्त्राणिचमननीयानि ।

मनसस्तु पराबुद्धिः । शुभकर्म्म चिन्तनेन शास्त्रमननेन च मनसाअग्रे ज्ञानात्मिका शुभाबुद्धिरुत्पद्यते सा कस्त्वं कोऽहं कुत आयातः, का मे जननी को मेतातः इति ज्ञातुं सदा यतते ॥

Man is a rational being. He possesses five cognitive and five active senses: Mind, Wisdom ( Buddhi ) and Soul.

ब्रह्म सत्यं जगन्मिथ्या इत्यङ्गीकरोति । अयं निजः परोवेति गणना लघुचेतसाम् । उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥ एकएव सुहृद्धर्म्मो निधनेप्यनुयाति यः । शरीरेण समं नाशंसर्वमन्यत्तु गच्छति इति जानाति तेनापि जीवात्मन अध्यात्मनि अतितरां सहायः-परं कदन्नादिसेवनात् कुत्सितमनसा कुकर्मचिन्तनेन नावलादि मननेन "यहजगमिट्ठासां अगलाकिन डिट्ठा„ भवतु पापेन मयायथा कथञ्चित् परवञ्चनादि गर्हितोपायैरपि द्रव्यं समुपार्ज्य स्वार्थमुद्धरणीयम् । भिक्षोमांसनिषेवनं प्रकुरुषे किन्तेन मद्यंविनामद्यश्चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह । वारस्त्री रतये कुतस्तव धनं चौर्येण द्यूतेनवा । चौर्य्यद्यूतपरिश्रमोपि भवतः भ्रष्टस्य कान्यागतिः । इत्यादि परिभ्रष्टज्ञानं भवति तेनाध्यात्मनि महती विनष्टिः । इति शुभज्ञानाय शुद्धा बुद्धिः संस्कार्य्या । एवंतत्त्वेषु शुद्धेषु शारीरिकबले चोन्नते इन्द्रियेषु नियतेषु सद्विषये च प्रवृत्तेषु मनसि च शास्त्रमनने सत्कर्म्मचिन्तने च लग्ने बुद्धयांश्च सत्य ज्ञाने प्रवृत्तायां महङ्कारोपि शुभः शान्तः लाभदो जायते यथा "सोहम् शिवोहम्„ अहंतस्यैव जगदीश्वरस्यपुत्रः । प्रकृति माता च मे जननी धर्म्मो मे सखा । वसुधा च मे कुटुम्बकम् । वस्तुतश्चाहम् षडूर्मिषड्भावेत्यादि सर्वदोषरहितः सत्यज्ञानानन्तस्वरूपः निर्विकल्पसच्चिदानन्दरूप इति मया स एव क्लेशकर्म्म विपाकाशयैरपरामृष्टः

सच्चिदानन्दरूपश्चिन्तनीय इति पूर्वोक्ताहङ्कारेणापि आध्यात्मनि प्रवर्त्तमानस्य जीवात्मनि महालाभः किन्तु कदन्नसेवनादिभि स्तत्त्वेषु परिभ्रष्टेषु व्यसनासक्तेषु दुर्बलेषु चेन्द्रियेषु मनसि पापचिन्तनेन मलिने बुद्ध्याश्च म्लानायां अहङ्कारोनर्थकरो जायते इदं मम इदञ्च तस्य अयं ममपुत्रः इदं मे कलत्रम् अहं राजा अहंधनाढ्य अहंमध्यक्षः अह मुच्चजात्यानुत्पन्नः इत्यादि महाभिमानदेऽहङ्कारेजाते जीवात्मन अध्यात्मनि प्रवृत्तस्य महानर्थस्तेन सात्त्विकभोजनादिभिस्तत्त्वशुद्धि प्रवृद्धिः,इन्द्रियाणां सद्विषये प्रवृत्तिः मनसा शास्त्रमननम्, बुद्धेश्च ज्ञानेप्रवृत्तिः शुभः शुद्धः सोहमित्याद्यहङ्कारश्चसदाध्यात्मिक सहायको विभावनीय इत्येकेन प्रकारेण तत्त्वेन्द्रियमनोबुद्ध्यहङ्काराणामध्यात्मनि दशां प्रदर्श्य प्रकारान्तरेण दर्शयति ।

यदुक्तं भगवता श्रीकृष्णेन इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तुसः इति आध्यात्मनि प्रवृत्तिं चिकीर्षता मनुजेन सात्त्विकभोजनादिभिः तत्त्वानि शुद्धानि प्रबलानि च सम्पादनीयानि येनेन्द्रियाण्यपि शुद्धानि प्रबलानि सम्पादितानि स्युः तानि च मनः समर्पितानि कार्य्याणि मनश्चबुद्धि समर्पितं स्यात् बुद्धिश्चात्मसमर्पिता आत्मा च परमात्मसमर्पितः स्यात्ततोऽभीष्ट सिद्धिर्निश्चिता । परमात्मसमर्पणञ्च तच्चिन्तनेन, ज्ञानप्राप्तिस्तदाज्ञापालनञ्चनाम । अथवा इन्द्रियाणि हयान्याहुर्मनः प्रग्रहमेव च । बुद्धिन्तु सारथिं विद्धि आत्मानं रथिनन्तथा ॥ यथा लोके रथे रथी प्रधानोऽध्यक्षश्च हयप्रग्रहसारथयश्चतत्साधनानि एवमाध्यात्मलोकेऽपि प्रधानं आत्मा इन्द्रियमनोबुद्धिरूपाणि च तत्साधनानि उच्छृङ्खलानि कुमार्गंयान्ति दुर्बलानि च नचलन्ति किन्तु नियमितानि प्रबलानि सन्मार्ग प्रसृतानि अभीष्टदेशं त्वरितं नयन्ति एवमेवेन्द्रियाणि चाध्यात्मिके लोके । यथा च लोके सारथिना प्रग्रहेऽवधीरिते हयानांदशा दुर्घटा समाहितचेतसा च शिक्षितेन धृते सुघटा । एवमेव मनसस्तत्र, यथा च लोके सारथिर्मूर्खो ज्ञानहीनश्चनार्थ सिद्ध्यै किन्त्वनर्थाय–महाभारते,विजयोपि अर्जुनेन श्रीकृष्ण सारथितया लब्धः । एषैवदशा बुद्धेराध्यात्मि के लोके । यथा लोके ज्ञानहीनोऽविवेकी रथीस्वच्छन्दं चरत्यनर्थकर एवमात्मा तत्र इत्याध्यात्मप्रवृत्त्यांमात्मनिर्विवेक ईश्वर भयश्चावश्यकः । उदासीनेउदासीनतास्पष्टा ॥

If these follow a righteous path and obey the soul, they are its helpers in its spiritual regeneration. On the other hand, if they follow the wrong path and disobey the soul they retard its progress in the same degree.

एव पूर्वोक्तदिशातसद्गुणान् ।सज्जनान् ब्रह्ममार्ग जिगमिषून् ब्रह्ममार्गाधिकारित्व सिद्ध्यै वक्ष्यमाणश्लोकैः किञ्चिदुपदिशति तथाहि—

प्राणाघातान्निवृत्तिः परधनहरणं संयमः सत्यवाक्यम् । कालेशक्त्याप्रदानं युवतिजनकथा मूकभावः परेषाम् ॥ तृष्णास्रोतो विभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा । सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ वांछासज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता । विद्यायां व्यसनं स्वयोषितिरतिर्लोकापवादाद्भयम् ॥ भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले । येष्वेते निवसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान् गुणान् ख्यापयन्तः । स्वार्थान् संपादयन्तो विततबहुतरारम्भयत्नाः परार्थं ॥ क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान् दुर्मुखान् दूषयन्तः । सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः ॥ भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्भूरिविलम्बिनोघनाः । अनुद्धताः सत्पुरुषाःसमृद्धिभिः स्वभावएवैव परोपकारिणाम् ॥ तृष्णां छिन्धिभजक्षमां जहिमदं पापेरतिं मा कृथाः । सत्यं ब्रूह्यनुयाहिसाधुपदवीं सेवस्वविद्वज्जनात् ॥ मान्यान्मानयविद्विषोप्यनुनय प्रख्यापयस्वान् गुणान् । कीर्तिं पालयदुःखिते कुरु दयामेतत्सतां लक्षणम् ॥ ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक् संयमः । ज्ञानस्योपशमः श्रुतस्य विनयोवित्तस्य पात्रेव्ययः ॥ अक्रोधस्तपसः क्षमाप्रभवितुर्धर्मस्य निर्व्याजता । सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥

आध्यात्मिकोन्नतिःका What is spritual regeneration ? ।

## सू० जीवस्याज्ञाननिवृत्तिर्ब्रह्मज्ञानप्राप्तिश्चाध्यात्मिकोन्नतिः ॥ ४ ॥

Spiritual regeneration implies the sweeping away of the veils of illusion surrounding the real and abiding self and the acquisition of the knowledge of the Brahma or soul.

भा० रज्जौ सर्पस्येव शुक्तिकायां रजतस्येवअसारे संसारे सत्यबुद्धिनिवृत्तिः मेघापाये सूर्यवदज्ञानान्धकारापाये स्वतःप्रकाशनमाने सच्चिदानन्दरूपे ब्रह्मज्ञानानुभवे सत्यज्ञाने प्रवृत्तिश्चाध्यात्मिकोन्नतिरितिनाम्ना कथ्यते । असारोयं संसारः तृणाग्निसमं जीवितम्, अभ्रच्छायासदृशा भोगाः, स्वप्नसदृशः पुत्रकलत्रमित्रवर्गसम्बन्धः ॥ नायमत्यन्तसम्वासोलभ्यते येनकेनचित् ॥ अपि शरीरेण किमुतान्येनकेनचित् ॥ इत्येतेषु वस्तुतोऽसत्यरूपेषु सम्बन्धं परिहायापि स्वदेहे चापि ममतां परित्यज्य ( वस्त्वन्तरेषु च ममता गणनैव का ) प्रपञ्चात्मकमिथ्या ज्ञानान्निवृत्तिर्जीवस्याथापि अजस्य नित्यस्य शाश्वतस्य पुराणस्य दीप्तानलार्कद्युते रप्रमेयस्य शुद्धस्याद्वयस्य क्लेशकर्मविपाकाशयैरपरा

सूक्ष्मस्य ब्रह्मणोज्ञानस्य प्राप्तिश्चाध्यात्मिकोन्नतिर्जीवस्य परमसुखदा परमशान्तिदा मोक्षदा च ॥

सा कथं जायते इत्याह How can spiritual regeneration be attained?

सू० अधर्ममार्गनिवृत्त्या धर्ममार्गप्रवृत्त्योतवा माया-मार्गपरित्यागाद् ब्रह्ममार्गपरिग्रहाच्च जायते सा ॥ ५ ॥

भा० ब्रह्मजिज्ञासोः कुटुम्बम् The family of the student of spiritual regeneration by Bhartrihari:—

धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी । सत्यंसूनुरयं दया च भगिनी भ्रातामनः संयमः ॥ शय्याभूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनम् । एते यस्य कुटुम्बिनो वदसखे कस्माद्भयं ज्ञानिनः ॥

The student of spiritual regeneration should not be dismayed for he belongs to a family of the prowess noted below:–
Father Patience, Mother Forgiveness, Long ending wife Peace, Son Truth, Sister Kindness, Brother Control over, Mind Couch Earth. Clothes Directions and Food the water of immor tality of divine knowledge

ब्रह्मजिज्ञासोः स्नानम् Bathing river of the stu dent of spiritual regeneration

आत्मानदी संयमपुण्यतीर्था सत्योदकाशीलतटादयोर्मिः ॥ तत्राभिषेकं कुरु-पाण्डुपुत्र ! न वारिणा शुध्यति चान्तरात्मा ॥

The soul is a river which has-self restraint for its holy stairs, truthfulness for its water, good disposition for its banks, & mercy for its waves: Bathe in this river, O, Son of Pandu: The inner Soul is not purified by Physical water.

ब्रह्मजिज्ञासोर्भजनम् Prayer for the student of spiritual regeneration by Bhagwan Shankaracharya.

दिनमपिरजनी सायंप्रातः शिशिरवसन्तौ पुनरायातः ॥ कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः । भजगोविन्दं २ गोविन्दं भज मूढमते॥ प्राप्तेसन्निहिते मरणे नहि नहि रक्षति डुकृञ् करणे ॥ ( ध्रुवपदम् ) इत्यादि सर्वं ग्रन्थान्तराज्ज्ञेयम् ॥

ब्रह्मजिज्ञासोः साधनपञ्चकम् Instruments for the student of Spiritual regeneration in five shlokas by Bhagwan shankaracharya

वेदो नित्यमधीयतां तदुदितं कर्म्मस्वनुष्ठीयताम्। तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम्॥ पापौघः परिधूयतां भवसुखेदोषोनुसन्धीयताम्। आत्मेच्छाव्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम्॥ १॥ सङ्गःसत्सु विधीयतां भगवतो भक्तिर्दृढ़ाधीयताम्। शान्त्यादिः परिचीयतां दृढ़तरं कर्माशु संत्यज्यताम्। सद्विद्वानुपसेव्यतां प्रतिदिनं तत्पादुके सेव्यताम्॥ ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम्॥ २॥ वाक्यार्थश्च विचार्य्यतां श्रुतिशिरः पक्षः समाश्रीयताम्। दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोनुसंधीयताम्॥ ब्रह्मैवास्मिविभाव्यतामहरहः गर्वः परित्यज्यताम्॥ देहेहं मतिरुज्यतां बुधजनैर्वादः परित्यज्यताम्॥ ३॥ क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधंभुज्यताम्। स्वाद्वन्नं नतुयाच्यतां विधिवशात्प्राप्तेनसंतुष्यताम्॥ शीतोष्णादि विषह्यतां नतुवृथावाक्यं समुच्चार्य्यताम्। औदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्य्यमुत्सृज्यताम्॥४॥ एकान्तेसुखमास्यतां परतरेचेतः समाधीयताम्। पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम्॥ प्राक्कर्म्मप्रविलाप्यतां चितिवशान्नाप्युत्तरे श्लिष्यताम्। प्रारब्धंत्विहभुज्यतामथपर ब्रह्मात्मना स्थीयताम्॥५॥ यः श्लोकपञ्चकमिदं पठते मनुष्यः संचिन्तयत्यनुदिनं स्थिरतामुपेत्य। तस्याशु संसृति दवानलतीव्र घोरतापः प्रशान्तिमुपयाति चितिप्रसादात्॥ ६॥

ब्रह्मजिज्ञासोरात्मबोधः—The spiritual realisation for the student of spiritual regeneration by Bhagwan Shankaracharya

तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम्। मुमुक्षूणामपेक्ष्योयमात्मबोधो विधीयते॥ १॥ बोधोऽन्यसाधनेभ्योहि साक्षान्मोक्षैकसाधनम्। पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिध्यति॥ ५॥ अविरोधितया कर्म नाविद्यां विनिवर्तयेत्। विद्याऽविद्यां निहन्त्येव तेजस्तिमिरसंघवत्॥ ३॥ परिच्छिन्नमिवाज्ञानात्तन्नाशे सति केवलः। स्वयं प्रकाशयते ह्यात्मा मेघापायेंऽशुमानिव॥ ४॥ अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्धि निर्मलम्। कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत्॥ ५॥ संसारः स्वप्नतुल्योहि रागद्वेषादिसंकुलः। स्वकाले सत्यवद्भाति प्रबोधे सत्यसद्भवेत्॥ ६॥ तावत्सत्यं जगद्भाति शुक्तिकारजतं यथा। यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम्॥ ७॥ सच्चिदात्मन्यनुस्यूते नित्येविष्णौ प्रकल्पिताः। व्यक्तयो विविधाः सर्वा हाटके कटकादिवत्॥ ८॥ यथाकाशो हृषीकेशो नानोपाधिगतो विभुः। तद्भेदाद्भिन्नवद्भाति तन्नाशे सति केवलः॥ ९॥ नानोपाधिवशादेव जातिवर्णाश्रमादयः। आत्मन्यारोपितास्तोये रसवर्णादि भेदवत्॥ १०॥ पञ्चीकृत तदा भूतं सभवं कर्मसञ्चितम्। शारीरं

सुखदुःखानां भोगायतनमुच्यते ॥ ११ ॥ पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृत भूतोत्थं सूक्ष्मांगं भोगसाधनम् ॥ १२ ॥ अनाद्यविद्यानिर्वाच्या कारणोपाधिरुच्यते । उपाधित्रितयादन्यमात्मानमवधारयेत् ॥ १३ ॥ पञ्चकोशादियोगेन तत्तन्मय इवस्थितः । शुद्धात्मा नीलवस्त्रादियोगेन स्फटिको यथा ॥ १४ ॥ वपुस्तुषादिभिः कोशैर्युक्तं युक्त्यावघाततः । आत्मानमन्तरं शुद्धं विविच्यात्तन्दुलं यथा ॥ १५ ॥ सदा सर्वगतोप्यात्मा न सर्वत्रावभासते । बुद्धावेवावभासेत स्वच्छेषु प्रतिबिम्बवत् ॥१६॥ देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणम् । तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा ॥ १७ ॥ व्यापृतेष्विन्द्रियेष्वात्मा व्यापारी वा विवेकिनाम् । दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी ॥ १८ ॥ आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः । स्वकीयार्थेषु वर्तन्ते सूर्यालोके यथाजनाः ॥१९॥ देहेन्द्रियगुणान्कर्माण्यमले सच्चिदात्मनि । अध्यस्यन्त्यविवेकेन गगने नीलतादिवत् ॥ २० ॥ अज्ञानान्मनसोपाधेः कर्तृत्वादीनि चात्मनि । कल्प्यन्तेऽम्बुगते चन्द्रे चलनादि यथांभसः ॥ २१ ॥ रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते । सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः ॥ २२ ॥ प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता । स्वभावः सच्चिदानन्दनित्यनिर्मलतात्मनः ॥ २३ ॥ आत्मनः सच्चिदंशश्च बुद्धेर्वृत्तिरिति द्वयम् । संयोज्य चाविवेकेन जानामीति प्रवर्तते ॥ २४ ॥ आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति । जीवः सर्वमलं ज्ञात्वा कर्ताद्रष्टेति मुह्यति ॥ २५ ॥ रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत् । नाहं जीवः परात्मेति ज्ञातं चेन्निर्भयो भवेत् ॥ २६ ॥ आत्मावभासयत्येको बुद्ध्यादीनीन्द्रियाणि हि । दीपो घटादिवत्स्वात्मा जडैस्तैर्नावभास्यते ॥२७॥ स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः । न दीपस्यान्यदीपेच्छा यथा स्वात्मा प्रकाशते ॥ २८ ॥ निषिध्य निखिलोपाधीन्नेति नेतीति वाक्यतः । विद्यादैक्यं महावाक्यैर्जीवात्मपरमात्मनोः ॥ २९ ॥ आविद्यकं शरीरादि दृश्यं बुद्बुदवत्क्षरम् । एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्मलम् ॥ ३० ॥ देहान्यत्वान्न मे जन्म जराकार्श्यलयादयः । शब्दादिविषयैःसंगो निरिन्द्रियतया न च ॥३१॥ अमनस्त्वान्न मे दुःखरागद्वेषभयादयः । अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतिशासनात् ॥ ३२ ॥ निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः । निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥ ३३ ॥ अहमाकाशवत्सर्वंबहिरन्तर्गतोऽच्युतः । सदा सर्वसमः शुद्धो निःसंगो निर्मलोऽचलः ॥ ३४ ॥ नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् । सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥ ३५ ॥ एवं निरन्तराभ्यस्ता ब्रह्मैवास्मीति वासना । हरत्यविद्याविक्षेपान् रोगानिव रसायनम् ॥ ३६ ॥ विविक्तदेश आसीनो विरागो विजितेन्द्रियः । भावयेदेकमात्मानं तमनन्तमनन्यधीः ॥ ३७ ॥ आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया सुधीः । भावयेदेकमात्मानं निर्मलाकाशवत्सदा

॥३८॥ रूपवर्णादिकं सर्वं विहाय परमार्थवित्। परिपूर्णचिदानन्द स्वरूपेणावतिष्ठते॥३९॥
ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते। चिदानन्दैकरूपत्वाद्दीप्यते स्वयमेव हि ॥४०॥
एवमात्मारणौ ध्यानमन्थने सततं कृते। उदितावगतिर्ज्वाला सर्वाज्ञानेन्धनं दहेत्॥४१॥
अरुणेनेव बोधेन पूर्वसंतमसे हृते । तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥ ४२ ॥
आत्मा तु सततं प्राप्तोप्यप्राप्तवदविद्यया। तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा॥४३॥
स्थाणौपुरुषवद्भ्रान्त्या कृता ब्रह्मणि जीवता। जीवस्य तात्त्विके रूपे तस्मिन् दृष्टे निव-
र्तते॥ ४४ ॥ तत्त्वस्वरूपानुभवादुत्पन्न ज्ञानमंजसा। अहं ममेति चाज्ञानं बाधते दिग्भ्रमा
दिवत् ॥४५॥ सम्यग्विज्ञानवान्योगी स्वात्मन्येवाखिलं स्थितम्। एवं च सर्वमात्मान
मीक्षते ज्ञानचक्षुषा ॥ ४६ ॥ आत्मैवेदं जगत्सर्वमात्मनोऽन्यन्न विद्यते। मृदोयद्वद्घटा-
दीनि स्वात्मानंसर्वमीक्षते ॥४७॥ जीवन्मुक्तस्तुतद्विद्वान्पूर्वोपाधिगुणांस्त्यजेत्। सच्चि-
दानन्दरूपत्वाद्भवेद्भ्रमरकीटवत् ॥ ४८ ॥ तीर्त्वा मोहार्णवं हत्वा रागद्वेषादि राक्ष-
सान्। योगी शान्तिसमायुक्तो ह्यात्मारामो विराजते ॥ ४० ॥ उपाधिस्थोऽपि तद्धर्मैर्न
लिप्तो व्योमवन्मुनिः। सर्वविन्मूढवत्तिष्ठेदसक्तो वायुवच्चरेत् ॥५०॥ बाह्यां नित्यसुखा
सक्तिं हित्वाऽऽत्मसुखनिर्वृतः । घटस्थदीपवत् स्वच्छः स्वान्तरेव प्रकाशते ॥ ५१ ॥
उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः। जले जलं वियद्व्योम्नि तेजस्तेजसि वा-
यथा॥५२॥ यल्लाभान्नापरोलाभो यत्सुखान्नापरं सुखम्। यज्ज्ञानान्नापरंज्ञानं तद्ब्रह्मेत्य-
वधारयेत् ॥५३॥ यं दृष्ट्वा न परं दृश्यं यद्भूत्वा न पुनर्भवः। यज्ज्ञात्वानपरंज्ञेयं तद्ब्रह्मे-
त्यवधारयेत् ॥५४॥ तिर्यगूर्ध्वमधःपूर्णं सच्चिदानन्दमव्ययम्। अनन्तंनित्यमेकं यत्तद्ब्रह्मेत्य-
वधारयेत् ॥५५॥ अतद्व्यावृत्तिरूपेण वेदांतैर्लक्ष्यतेऽव्ययम्। अखण्डानन्दमेकं यत्तद्ब्रह्मे-
त्यवधारयेत् ॥५६॥ अखण्डानन्दरूपस्य तस्यानन्दलवाश्रिताः। ब्रह्माद्यास्तारतम्येन भ-
वन्त्यानन्दिनोऽखिलाः ॥५७॥ तद्युक्तमखिलं वस्तु व्यवहारस्तदन्वितः। तस्मात्सर्वगतं
ब्रह्मक्षीरे सर्पिरिवाखिले॥५८॥ अनण्वस्थूलमह्रस्वमदीर्घमजमव्ययम्। अरूपगुणवर्णा-
ख्यं तद्ब्रह्मेत्यवधारयेत्॥ ५९ ॥ यद्भासाभासतेऽर्कादि भास्यैर्यत्तु न भास्यते। येन सर्व-
मिदं भाति तद्ब्रह्मेत्यवधारयेत् ॥ ६०॥ स्वयमन्तर्बहिर्व्याप्य भासयन्नखिलं जगत्। ब्रह्म
प्रकाशते वह्निप्रतप्तायसपिण्डवत् ॥ ६१॥ जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किञ्चन। ब्र-
ह्मान्यद्भातिचेन्मिथ्या यथा मरुमरीचिका ॥६२॥ दृश्यतेश्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत्
तत्वज्ञानाच्चतद्ब्रह्म सच्चिदानन्दमद्वयम् ॥६३॥ सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते।
अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥ ६४ ॥ श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरिता-
पितः। जीवःसर्वमलान्मुक्त स्वर्णवद्द्योततेस्वयम् ॥६५॥ हृदाकाशोदितो ह्यात्मा बो-
धभानुस्तमोपहृत्। सर्वव्यापी सर्वधारी भाति सर्वं प्रकाशते ॥६६॥ दिग्देशकालाद्यन-

पेक्ष्य सर्वगं शीतादिद्वन्द्वमित्यसुखं निरञ्जनम् । यः स्वात्मतीर्थं भजते विनिष्क्रियः स सर्ववित्सर्वगतोऽमृतो भवेत् ॥ ६७ ॥

How can spiritual regeneration be obtained contined as Bhag wan Shankaracharya has noticed in his aparohshanubhuti.

इत्येवमाध्यात्मिकोन्नतिविद्यार्थिने स्वात्माद्यात्मबोधान्तमुक्त्वेदानीं भूयःसूत्रोक्तदिशा कथयति यत्सापापमार्गात् नरकादिसाधनभूतान्निन्दितकर्मपथात् निवृत्त्या धर्ममार्गे विहितकर्म अन्येस्वर्गापवर्गादिसाधनभूतेप्रवृत्त्या च सा आध्यात्मिकोन्नतिर्जायते ।

पापमार्गोहि-ब्रह्महत्यासुरापानंस्तेयंगुर्वङ्गनागमः । महान्तिपातकान्याहुः संसर्गश्चापितैःसह इत्यादिशास्त्रनिषिद्धात्पापमार्गात्तेननितरांनिवृत्तिः कार्या किन्तु धृतिःक्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः धीर्विद्यासत्यमक्रोधोदशकंधर्मलक्षणम् इत्यादितत्त्वच्छास्त्रविहितेधर्ममार्ग सुदृढापूर्णतया प्रवृत्तिःकार्या-यदुक्तंशङ्कराचार्यभगवता-स्ववर्णाश्रमधर्मेण तपसा हरितोषणात् ॥ साधनञ्चभवेत्पुंसांवैराग्यादि चतुष्टयम् ॥ ननुनीतिमार्गः काम्यकर्म्ममार्गोऽपि वा न पापमार्गः किन्तु धर्म्यमार्ग एव-पूर्वोक्तदिशा च सोपि आध्यात्मिकोन्नत्यां कारणतया सम्भवितुमर्हतीतिइत्याह-मायामार्गनिवृत्त्या ज्ञानमार्गप्रवृत्त्या च साजायते-यद्यपि नीतिमार्गःकाम्यकर्ममार्गश्चनपापस्य तथापि सोऽपि सांसारिकः कर्मबन्धनप्रदः प्रपञ्चमार्गएव। लब्ध्वापि स्वर्गं क्षीणेपुण्येमर्त्यलोकेपतन्ति इत्युक्तदिशामर्त्यलोकमागत्यभूयोपि कर्मबन्धन दुःखार्तो जायते इत्यात्मिकोन्नतिं पूर्णतया चिकीर्षता पुरुषेण सोपिमार्गः स्वाभीष्टसिद्धध्ये परमसाधनभूतो न निश्चेय इति माया मार्गान्निवृत्त्या किन्तु ज्ञानमार्गे तत्त्वज्ञानरूपे आत्मिकविवेचनमये आत्मसाक्षात्कारसाधने प्रवृत्त्या च सा आध्यात्मिकोन्नतिर्जायते यदुक्तं तेनैव शङ्कराचार्य्य भगवता उक्त साधनयुक्तेन विचारः पुरुषेण हि ॥ कर्त्तव्यो ज्ञानसिद्ध्यर्थमात्मनः शुभमिच्छतानोत्पद्यते विना ज्ञानं विचारेणान्यसाधनैः यथा पदार्थं भानंहि-प्रकाशेनविनाक्वचित् ॥

## वैराग्यादिसाधनचतुष्टयात् ॥ ६ ॥

How can spiritual regoneration be abtainod continue.

१ वैराग्य २ विवेक ३ शमादि षट्क ४ मुमुक्षुतारूपसाधनचतुष्टयात्साध्यात्मिकोन्नतिर्जायते तत्र १ वैराग्यम्-ब्रह्मादिस्थावरान्तेषु वैराग्य विषयेष्वनु ॥ यथैव काकविष्टायां वैराग्यं तद्धिनिर्मलम् । तत्र २ विवेकः नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीतगम् । एवं यो निश्चयः सम्यग्विवेको वस्तुनः स वै । तत्र ३ शमादिषट्कम् ( १ ) सदैव

वासनात्यागः शमोयमिति शब्दितः (२) निग्रहोवाह्यवृत्तीनां दम इत्यभिधीयते ॥ (३) विषयेभ्यः परावृत्तिः परमोपरतिर्हिसा (४) सहनं सर्वदुःखानां तितिक्षा सा शुभा-मता ॥ (५) निगमाचार्य्यवाक्येषु भक्तिः श्रद्धेतिविश्रुता (६) चित्तैकाग्र्यन्तु सल्लक्ष्ये समाधानमितिस्मृतम् ॥ तत्र (७) मुमुक्षुता संसारबन्धनिर्मुक्तिः कथं मे स्यात्कदा विधे। इति यासुदृढाबुद्धिर्वक्तव्या सा मुमुक्षुता।

Spiritual regeneration can be acquired by four Sadhans I. E. Vairagya ( aversion to worldly things ) 2... Vibek ( The knowledge of real and unreal ) 3. Sham. 1.( renunciation ) 2. Dam ( Self control ) 3. Uprati ( Freedom from passions. ) 4. Titiksha ( Endurance of all pain and suffering ) 5. Shradha ( Faith in Shastras and spiritual leaders ) 6. Samadhan ( Unity of puroose ) 4, Mumukshuta ( A desire for salvation )

नकुतज्ज्ञानं कस्माज्जायते इत्याह

## सू० आध्यात्मिकविचारात् ॥ ७ ॥

कोहमित्याद्याध्यात्मिकविचारात् तदात्मतत्वानुभवरूपं ज्ञानं जायते तद्विचार-स्वरूपञ्च श्रीशङ्कराचार्य्य भगवता इत्थं दर्शितम् कोहं कथमिदं जातं कोवैकर्त्तास्य-विद्यते। उपादानं किमस्तीह विचारः सोयमीदृशः ॥ नाहं भूतगणो देहो नाहमक्षगण-स्तथा। एतद्विलक्षणः कश्चिद् विचारः सोयमीदृशः ॥ इत्यात्मनः सद्रूपस्यासद्-रूपस्य च जगतः यथार्थाववोधरूपाद् विचारात् तज्ज्ञानं जायते ॥

Spiritual regeneration can be acquired by Adhyatmic Vichar i. e. Gian ( Spiritual cogitation ) i. e. who am I ? how has the world originated who is the maker of this world what is its material cause ? etc.

सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवदित्यतोऽज्ञानं दर्शयन् तत्स्वरूपमाह-

The truth of a thing is established by having a look at its pros and cons. so we give below the Agyan ( want of knowledge ) which is opposed to it.

The Agyan includes the belief in the abiding nature of the prapanch ( the cosmos ) and taking the body for the ( Atma ) soul,

## प्रपञ्चे नित्यबुद्धिर्देहे चात्मबुद्धिरज्ञानम् ॥ ८ ॥

यदुक्तंतेनैव श्रीशङ्कराचार्य्य भगवता–अनुभूतोप्ययं लोको व्यवहार क्षमोपिसन्। अ-सद्रूपो यथा स्वप्ने उत्तरक्षणबाधतः॥ स्वप्नोऽि जागरेणऽलीकः स्वप्नोऽपि जागरोनहि। द्वयमेवलये नास्ति लयोपि ह्यु भयोर्नच । आत्माविनिष्कलोह्येकोदेहोऽनित्यविकार-वान्। तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ आत्मानियामकश्चान्तर्देहोवा-ह्यो नियम्यकः। तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम्। आत्मा ज्ञानमयः पुण्योदेहो मांसमयोऽशुचिः। तयो० ॥ आत्मा प्रकाशकः स्वच्छो देहस्तामस उच्यते। तयो० ॥ आत्मा नित्योहिसद्रूपो देहोऽनित्योऽह्यसन्मयः। तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ इति प्रपञ्चे वस्तुतो मिथ्याभूपेनित्यबुद्धि रूपादात्मनोदूरतोभिन्ने देहेचात्मबु-द्धिरूपादज्ञानाद् ज्ञानिनासदा निवृत्तिः कार्य्यायेतावमपि अज्ञानिजनरीत्या प्रपञ्चे नित्यबुद्धिं कृत्वा देहेचात्म भावनां प्रपञ्चासक्तः देह पोषणरतः देहबन्धुषुममता प-रायणस्तत्कर्म्मनिरतः स्वामूल्य–मनुजजोवन–वैफल्यं कुर्वन्नात्मतत्त्वानुभव वाञ्छितो-नस्यात् ॥

भेदे रागद्वेषौ ज्ञानमार्गप्रतिद्वन्द्विनौभवत इति तद्दूरीकर्त्तुं भेदवादं खण्डयति।

Because so long as differences prevail love and enmity also endure. These are hinderances in the path of spiritual organisa-tion. The Bhagwan therefore emphasises the sameness of the human soul throughout the world.

### सू०–न भेदः चैतन्यस्यैकरूपत्वाद् रज्जौ सर्पग्रहस्येव ब्रह्मण्यज्ञानेन जीवाभासात् सुवर्णाज्जायमानस्य सुवर्ण-त्वमिव ब्रह्मणो जायमानस्याखिलप्रपञ्चस्य शाश्वतब्रह्म-शासनात् ॥ ९ ॥

भा०–भेदो न मन्तव्यः एकस्य त्रिकालमेकरूपस्थायिनः चैतन्यस्य एकरूपत्वात् यथा ज्ञानेन किञ्चित्कालाय रज्जौ सर्पभ्रान्तिर्भवति यथार्थज्ञानराहित्ये एवमेव ब्रह्मणि कर्मबन्धनप्रसक्ते आत्मतत्त्वज्ञानशून्ये मलविक्षेपावरणयुते जीवभावो यथार्थज्ञानावधिं यावद्भवति जाते च ज्ञाने जीवो ब्रह्मैवैकरूपः। अपि वा यथा सुवर्णाज्जायमानस्य नि-खिलस्यापि वस्तुजातस्य सुवर्णत्वमेवं ब्रह्मणोजायमानस्याखिलजगतो ब्रह्मतयैक-रूपतेति कथं भेदः।

यदुक्तं शङ्कराचार्यभगवता चैतन्यस्यैकरूपत्वाद् भेदो युक्तो न कर्हिचित्। जीवत्वञ्च मृषाज्ञेयं रज्जौ सर्पग्रहोयथा ॥ रज्ज्वज्ञानात्क्षणेनैव यद्वद्रज्जुर्हि सर्पिणी।

भाति तद्वच्चितिः साक्षाद् विश्वाकारेण केवला ॥ उपादानंप्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते । तस्मात्सर्वप्रपञ्चो ऽयं ब्रह्मैवास्ति न चेतरत् ॥ व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् । इति ज्ञाते परे तत्त्वे भेदस्यावसरः कुतः ॥ श्रुत्या निवारितं नूनं नानात्वं स्वमुखात् । कथं भासो भवेदन्यः स्थिते चाद्वयकारणे ॥ दोषोऽपि विहितः श्रुत्या मृत्योर्मृत्युं स गच्छति । इह पश्यति नानात्वं मायया वञ्चितो नरः ॥ ब्रह्मणो सर्वभूतानि जायन्ते परमात्मनः । तस्मादेतानि ब्रह्मैव भवन्तीत्येव धारयेत् । ब्रह्मैव सर्वनामानि रूपाणि विविधानि च । कर्माण्यपि समग्राणि बिभर्तीति श्रुतिर्जगौ ॥ सुवर्णाज्जायमानस्य सुवर्णत्वं हि शाश्वतम् । ब्रह्मणो जायमानस्य ब्रह्मत्वञ्च तथा भवेत् ॥ स्वल्पमप्यन्तरं कृत्वा जीवात्मपरमात्मनो । यः संतिष्ठति मूढात्मा भयं तस्याभिभाषितम् । अज्ञानाद् द्वैते इतरधीः परं न ज्ञानादात्मत्वेन सर्वावलोकने किन्तु तत्र मोहशोकावप्यद्वितीयतो न भवतः ॥ मृद्घटत्वेन, शुक्तिरजतत्वेन, काञ्चनं कुण्डलत्वेन, व्योमनीलतया, स्थाणुः पुरुषत्वेन, शून्यं वेतालगन्धर्वपुरत्वेन आकाशे चन्द्रो द्विचन्द्रत्वेन जले च चञ्चलत्वेन, तन्तुः पटत्वेन, लोहः खड्गत्वेन, वृक्षच्छायाजले वृक्षविपर्यासेन पोतगमने स्थावरो जङ्गमतया, पित्त दोषेण शङ्खःश्वेततापीतत्वेन, दूरे महानपि अणुत्वेन, उपनेत्रतः सूक्ष्मोऽपि स्थूलत्वेन यथा यथार्थज्ञानराहित्ये अज्ञानादज्ञानिने भ्रान्त्याप्रतीयते एवमेवाज्ञानादज्ञानिने सर्वं ब्रह्ममयं जगन्नानारूपेण भासते आत्मनि चाविद्यातो देहाध्यासोऽज्ञानिने भवति सति च ज्ञाने सर्वं ब्रह्ममय जगद्भासते पर·

There is no difference because the soul is the same everywhers. Just as we mistake the rope for the snake, similarly, the Brahm through ignorance is taken for the Jiv. All things made of gold are gold in substance. similarly the world which has been created of Brahm is Brahm in substance.

मात्मनि च लीयते इति भेदो न वास्तविकः किन्तु रागद्वेषजनक इति ज्ञानिनामोक्षमार्गे प्रसरता सदूरतः कार्य्यः । किन्तु सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ॥ शत्रौ मित्रे समो भूत्वा हर्षशोकसमो भवेत् । अपि चा–विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ॥ शुनिचैव श्वपाके च पण्डिताः समदर्शिनः ॥ इति सर्वं समतया पश्येत् । अथापि आत्मान सततं जानन् कालं नय महाद्युते । प्रारब्धमखिलं भुञ्जन् नोद्वेगं कर्त्तुमर्हसि । इत्युक्तदिशा आत्मचिन्तनेन कालं सततं नयन् प्रारब्धभोगं मत्वानुद्विग्नमनाः सदास्यात् ।

इदानीं ज्ञानाज्ञाने प्रतिपाद्यभेदवादञ्च निराकृत्य मन्दाधिकरणे आध्यात्मिकोन्नतेः परमसाधनं निदिध्यासनं दर्शयति ।

सू० निदिध्यासनात्साङ्गमभ्यस्तात्स्वान्तरायवर्जितात्॥१०॥

भा०-ध्यैङ्चिन्तायामित्यतः सनिन्युपसृष्टात् निदिध्यासनात् अतिशयेनात्मध्यानरूपात् वक्ष्यमाणैस्त्रिपञ्चाङ्गैः सहाभ्यस्तात् निजोक्तस्यां विघ्नरूपानुसन्ध्यानराहित्यादिवर्गवर्जितात्साध्यात्मिकोन्नतिर्जायते ॥

Spiritual regenaration can be obtained by nididhayasan ( constant meditation and concentration of mind ) which could be studied only in all its parts and by bridging over the difficulties of the path by These are the parts of Nididhayasan:—

तदङ्गानि च तेनैव भगवता—

त्रिपञ्चाङ्गान्यथोवक्ष्ये पूर्वोक्तस्य हि लब्धये । तैश्च सर्वैः सदा कार्यं निदिध्यासनमेवतु ॥ नित्याभ्यासादृतेः प्राप्तिर्न भवेत् सच्चिदात्मनः । तस्माद् ब्रह्मनिदिध्यासेज्जिज्ञासुः श्रेयसे चिरम् ॥ यमो हि नियमस्त्यागो मौनं देशश्च कालता । आसनं मूलबन्धश्च देहसाम्यञ्च दृक्स्थितिः ॥ प्राणसंयमनं चैव प्रत्याहारश्च धारणा । आत्मध्यानसमाधिश्च प्रोक्तान्यङ्गानि वै क्रमात् । सर्वं ब्रह्मेति विज्ञानादिन्द्रियग्रामसंयमः । यमोयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ॥ सजातीयप्रवाहश्च विजातीय तिरस्कृतिः । नियमोहि परानन्दो नियमात् क्रियते बुधैः । त्यागःप्रपञ्चरूपस्य चिदात्मत्वावलोकनात् । त्यागोहि महतां पूज्यः सद्योमोक्षमयोयतः । यस्माद् वाचो निवर्तन्ते अप्राप्य मनसासह । तन्मौनं योगिभिर्गम्यं तद्भवेत्सर्वदा बुधः । वाचोयस्मान्निवर्तन्ते तद् वक्तुं केन शक्यते । प्रपञ्चो यदि वक्तव्यः सोपशब्दविवर्जितः । इति वा तद् भवेन्मौनं सतां सहजसंज्ञितम् । गिरामौनन्तु बालानां प्रयुक्तं ब्रह्मवादिभिः। आदावन्ते च मध्ये च जनो यस्मिन्न विद्यते । येनेदं सततं व्याप्तं स देशो विजनः स्मृतः ॥

कलनात्सर्वभूतानां ब्रह्मादीनां निमेषतः । कालशब्देन निर्दिष्टो ह्यखण्डानन्द अद्वयः । सुखेनैव भवेद् यस्मिन्नजस्रब्रह्मचिन्तनम् । आसनंतद् विजानीयान्नेतरत्सुखनाशनम् ॥ सिद्धं यत्सर्वभूतादि विश्वाधिष्ठानमव्ययम् । यस्मिन् सिद्धाः समाविष्टास्तद्वै सिद्धासनं विदुः । यन्मूलं सर्वभूतानां यन्मूलं ब्रह्मचिन्तनम् । मूलबन्धः सदासेव्यो योग्योऽसौ राजयोगिनाम् । अङ्गानां समतां विद्यात्समे ब्रह्मणि लीयते । । नोचेन्नैव समानत्वमृजुत्वम् शुष्कवृक्षवत् ॥ दृष्टिं ज्ञानमयीं कृत्वा पश्येद् ब्रह्ममय जगत् । सा दृष्टिः परमोदारा न नासाग्रावलोकनी । दृष्टिदर्शनदृश्यानां विरामो यत्र वा भवेत् । दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकनी । चित्तादिसर्वभावेषु ब्रह्मत्वे सर्वभावनात् निरोधः सर्व वृत्तीनां प्राणायामः स उच्यते ॥ निषेधनं प्रपञ्चस्य रेचकाख्यः समीरणः

ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरीरितः ॥ ततस्तद्वृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः। अयञ्चापि प्रबुद्धानामज्ञानां घ्राणपीडनम्। विषयेष्वात्मतां दृष्ट्वा मनसश्चितिमज्जनम्। प्रत्याहारः सविज्ञेयोऽभ्यसनीयो मुमुक्षुभिः ॥ यत्र यत्र मनो याति ब्रह्मणस्तत्र धारणात्। मनसो धारणं चैव धारणासा परा मता। ब्रह्मैवास्मीति सद्वृत्त्यानिरालम्बतया स्थितिः। ध्यानशब्देन विख्याता परमानन्ददायिनी। निर्विकार तयावृत्त्या ब्रह्माकारतया पुनः। वृत्तिविस्मरणं सम्यक् समाधिर्ज्ञानसंज्ञकः ॥

Yam–( Control of senses ) *Niyam*–( To catch hold of everything that promotes the progress on the way and to reject that which retards it ) Tyag– ( renunciation ). Moun–( Silence ). Desh ( Holyplace ) Kal– ( time ). Asan–( proper posture ) Moolbandh–(Devoting the mind toward an aim ) Dehsamya–( well-poised body ). Drikshtiti–( Looking at all beings with the same eye ). Pranayam–( Control of breath ) Pratyahar–( Turning of the mind towards the soul ) Dharna–( Meditation ). Dhyan–( Abstract contemplation ) Samadhi– ( Self-forgetfulness ).

इमंचाकृत्रिमानन्दं तावत्साधुसमभ्यसेत्। वश्योयावत्क्षणात्पुंसः प्रयुक्तःसन् भवेत्स्वयम् ॥ ततः साधननिर्मुक्तः सिद्धोभवतियोगिराट् ॥ तत्स्वरूपनचैतस्य विषयोमनसोगिराम्। तत्रान्तरायास्तेनैवभगवता–समाधौक्रियमाणे तु विघ्नाआयान्तिवैबलात् अनुसन्धानराहित्यमालस्यंभोगलालसम् ॥ लयस्तमश्च विक्षेपो रसास्वादश्चशून्यता एवंयद्विघ्नवाहुल्यं त्याज्यंब्रह्मविदाशनैः ॥

These are the obstacles in the way of Spiritual regenration:–

1. Anusandhan Rahitya ( Thoughtlessness ). 2. Alasya–( Idleness ). 3. Bhoglalsa– ( Desire for wordly things ). 4. Laye–( Sleep ). 5. Tama– ( Darkness–ignorance ). 6. Vikhshep ( attachment to sexual pleasures ) 7. Rasaswad ( Egotism ) 8. Sunyata–( Distraction of mind due to love and hatred ).

How the spiritual Regenaration can be obtained. ( Continued ) As noticed by Maharishi patanjli in his yog Darshan and Bhagwan Ved-vyas in his commentary on yog–Darshan.

## सू० योगात्साङ्गमभ्यस्तात् ॥ ११ ॥

भा० योगात्तदङ्गैर्यमनियमाद्यष्टाभिः सह यथायथं सेविताद्ध्यात्मिकोन्नतिर्जायते ।

Spiritual Ragenaration can be obained by yoga ( profound meditation ) practised along with its parts.

निरुध्यन्ते यस्मिन् प्रमाणादिवृत्तय अवस्थाविशेषे चित्तस्य सोऽवस्थाविशेषो योगः समाधिः । स च सार्वभौमश्चित्तस्य धर्म्मः चित्तशब्देनात्रान्तःकरणं बुद्धिर्नचितिशक्तिरपरिणामिनी-शास्त्र प्रामाण्यात्-भूमयश्च चित्तस्य दैत्यदानवविषयिणां क्षिप्ता, रक्षःपिशाचमत्तादि पामराणांमूढा,देवप्रथमभूमिकारूढजिज्ञासुप्रभृतीनां विक्षिप्ता एकाग्रयोगयोग्या समाधियोग्या निरुद्धाचेति पञ्चधा भवन्ति ॥ किन्तु तासु विक्षिप्तान्ताविक्षेपबहुला योगाय नहि कल्पन्ते परमेकाग्रे चेतसि यः सद्भूतमर्थं प्रद्योतयति क्षिणोति च क्लेशान् कर्म्मबन्धनानि श्लथयति निरोधमभिमुखी करोति स।संप्रज्ञातो योग इत्याख्यायते । स च वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगतश्चेति । तस्यैवचापरभेदः सर्ववृत्तिनिरोधेऽसम्प्रज्ञातः समाधिरिति ॥

तल्लक्षणं यथा—

## सू० योगश्चित्तवृत्तिनिरोधः ॥ १२ ॥

चित्तंहि प्रख्याप्रवृत्तिस्थितिशीलत्वात् त्रिगुणम्, प्रख्यारूपं-हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टमणिमाद्यैश्वर्य्यविषयेऽनुरागितयाक्षिप्तम्, तदेव तमसानुविद्धमधर्माऽज्ञानाऽवैराग्याऽनैश्वर्य्योपगंमूढम्, तदेव प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्म्मज्ञानवैराग्यैश्वर्य्योपगं विक्षिप्तम् किन्तुतदेव रजोलेशमलापेतंस्वरूपप्रतिष्ठमेकाग्रं विवेकख्यातिपरकाष्ठाग्रहं सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघध्यानोपगं भवतीत्येवं चित्तनिरूपणं कृत्वा इदानीं वृत्तिनिरूपणं करोति-वृत्तयः कर्माशयप्रथमक्षेत्रीभूताः क्लिष्टाः । ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टा इति पूर्वं द्विविधा प्रमाणविपर्य्ययविकल्पनिद्रास्मृतिभेदैः पञ्चधा भवन्ति प्रमाणञ्च प्रत्यक्षानुमानागमभेदेन त्रिविधम् । इन्द्रियार्थसन्निकर्षजन्यज्ञानं प्रत्यक्षम्, अनुमितिकारणमनुमानम् आप्तवाक्यं शब्दः॥शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः । अभावप्रत्यालम्बनावृत्तिर्निद्रा । अनुभूतविषयाऽसंप्रमोषः स्मृतिरिति पूर्वोक्ता सर्वा एव वृत्तयः सुखदुःखमोहात्मिका । सर्वेषामनुकूलवेदनीयं सुखम्, प्रतिकूलवेदनीयं दुःखम् । सुखानुशयी रागः । दुःखानुशयीद्वेषः । मोहः पुनरविद्येत्येता सर्वा वृत्तयः कुमार्गान्निरोद्धव्यास्तासां निरोधश्चाभ्यासवैराग्याभ्यां भवति । तत्र स्थितौ

यत्नोऽभ्यासः। दीर्घकालनैरन्तर्यसत्काराऽऽसेवितो दृढभूमिर्भवति । दृष्टाऽऽनुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यमिति पूर्वोक्तोपायद्वयेन ईश्वरप्रणिधानाद्वा समाधिलाभो योगिन आसन्नतमो भवति ।

भूमिका। तस्य योगस्य चाङ्गानि वक्ष्यमाणसूत्रे कथयति ।

सू०-यमनियमासनप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥१३॥

भा०—अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः। शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः। अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्, अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्, ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः। अपरिग्रहस्थैर्ये जन्मकथन्तासंबोधः । इत्येता यमस्थैर्ये सिद्धयः। अथ नियमेषु शौचात्स्वाङ्ग जुगुप्सा परैरसंसर्गः । सत्यशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च। सन्तोषादनुत्तमसुखलाभः। कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः। स्वाध्यायादिष्टदेवतासंप्रयोगः। समाधिसिद्धिरीश्वरप्रणिधानादिति नियमस्थैर्येसिद्धयः। स्थिरसुखमासनम् । स्वविषयाऽसम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः। देशबन्धश्चित्तस्य धारणा तत्र प्रत्ययैकतानता ध्यानम् । तदेवाऽर्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। तदेतेषु धारणाध्यानसमाधित्रयमेकत्र संयमः ॥ इत्यैतैर्गुरुशिक्षया शुचिनाऽप्रमत्तेन ब्रह्मचर्योपपन्नेन मेधाविनाऽऽध्यात्मिकोन्नतेर्विद्यार्थिना यथायथमभ्यस्तैर्योगाङ्गैर्योगेनच साध्यात्मिकोन्नतिर्जायते इति भगवान् महर्षिःपतञ्जलिर्योगदर्शने स्फुटीकरोति तद्व भाष्यकारो महर्षिवेदव्यासश्च ॥

सू०-सम्यग्दर्शनज्ञानचरित्रेभ्य इति जैनाः ॥ १४ ॥

तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्, तत्त्वेन यथायथार्थरूपेणार्थानां पदार्थानां श्रद्धानंदृष्ट्वा निश्चयीकरणं सम्यग्दर्शनं यथापुरुषः पुरुष एव न स्थाणुः। संशयविपर्ययानध्यवसायशून्यं ज्ञानं सम्यग्ज्ञानम्। स्थाणुर्वा पुरुषो वेति संशयः। स्थाणुः पुरुष इति विपर्ययः। किमिदमित्यनध्यवसायः। तैः शून्यं निश्चयात्मकं यथार्थज्ञानमित्यर्थः । मिथ्यात्वमयेभ्यः कामक्रोधमायामानलोभादिसांसारिकबन्धने कारणभूतेभ्यो विरक्तया यथार्थरूपेण धर्मजीवनं सम्यक्चारित्र्यम्, तेभ्य आध्यात्मिकोन्नतिर्जायते इति जैनाः स्वीकुर्वन्ति ॥

ACCORDING TO JAIN RELIGION SPIRITUAL REGENARATION CAN BE OBTAINED BY.

1. Samyak darshan-( Right preception of things ) 2. Samyak gyan-( Right knowledge of things ). 3. Samyak charitra-( Righteous life accompanied by renunciation of all desires with the object of contemplating on soul )

सू० ईश्वरस्यानन्यभावनया तदनन्यभक्त्या तस्य तदवतारस्य चाज्ञापालनेन नवाजरोजाजकातहज्जादि-स्वधर्म्मसेवनेनात्मज्ञानेन चेति यवनाः ॥१५॥

भा० ईश्वरएकएवाद्वितीयः-तस्यैवानन्याभक्तिः कर्त्तव्या नान्यदेवस्य-तस्य ई-श्वरस्य तदवतारस्य ( रसूल ) इत्याख्यस्य आज्ञा पाल्या-यथा नवाजपठनम् रोजा धारणम् जकात (दशांश) दानम् हज्ज करणम् इत्यादिनिजधर्मसेवनेन आत्मज्ञानेन च साध्यात्मिकोन्नतिर्जायते । इति यवनाः स्वीकुर्वन्ति ॥

According to Mohammadan religion spiritual Regenaration can be obtained by the following:- 1. Believing in god as one and the only reality 2. Supereme love and devotion to god and god alone. 3 Obeying the commands of god and his apostle. 4. Prayers-Fastings or observing Ramzan days-devoting one tenth of the income towards religious purposes. 5. Haj-piligrmage to Macca Madina and other holy places by practising such like duties and by know-ledge of soul etc.

सू० तदाज्ञां संपाल्य यत्नतः स्वेष्टदेवपूर्णविश्वासादिति पाश्चात्याः ॥ १६ ॥

तस्य स्वेष्टदेवप्रभुयूसीमहाभागस्याज्ञां यथाशक्ति पूर्णयत्नेननानुष्ठायस्वेष्टदेवे तस्मिन् पूर्णविश्वासात्साध्यात्मिकोन्नतिर्जायते इति क्रिश्चनमतानुगा अङ्गीकुर्वन्ति ।

How can spiritual regneration be aoquired ? (continued )

According to the christian faith the spiritual regeneration is acquired by the proper and true faith in christ aftr obeying his command-ments so for as possible.

The following are also needed for this object. ( They have already been treated in one form or another under the hindu reli-

gion, but they are given here to specify them as believed by the christians, because this book is written mainly at their persuation.

(*a*) The need of the unified development of the physical, mental and spiritual potencies latent in man, and the recognition of the place and significance of each of these in the life of the nation.

## सू०—शारीरिकमानसिकात्मिकबलोदयात् ॥ १७ ॥

भा०—समृद्धिः शारीरिकमानसिकात्मिकबलेभ्यः सा जायते इति पाश्चात्याः स्वीकुर्वन्ति तेषामयमाशयः यदन्यत्सर्वं शरीराद्धान्तरास्थातुं न शक्नोति उक्तञ्च—धर्मार्थकाममोक्षाणां प्राणाः संस्थितिहेतवः। तान्निघ्नता किं न हतं रक्षता किन्न रक्षितम् ॥ इति शारीरिकबलञ्चापि हितायैवात्र तच्च सात्त्विकभोजनेन ब्रह्मचर्यपालनेन च जायते यत्पूर्वं स्फुटतया साधितम् ॥ तदग्रे मानसिकबलम्, । आत्मानुभवोऽतिकठिनः परं तत्कर्तुं मनएव शक्नोति आत्मप्रत्यक्षञ्चापि मानसिकमेवेति नैयायिकाः । अथापि मनएव मनुष्याणां कारणं बन्धमोक्षयोः इत्युक्तम् । तन्मानसिकबलञ्च बाह्यवृत्तिभ्यो मनोव्यावृत्त्या मानसिकबलप्रवृद्धानां महापुरुषाणां शास्त्राध्ययनेनात्मचिन्तनेन चोत्तरोत्तरं वर्धते ॥ तदग्रे आत्मिकबलोदयः । गजानां पङ्कमग्नानां गजा एव धुरन्धराः । सूर्य्यप्रकाशाय सूर्यएवालमेवमेवात्मप्रकाशाय आत्मिकबलमेवयाथातथ्येन कारणम् । तद्बलञ्चात्मचिन्तनेन ज्ञानवृद्ध्या च वर्धते आत्मचिन्तनज्ञानवृद्धिश्च सम्यक् पूर्वं विविक्ता ॥

या जातिः ब्रह्मचर्यनिष्ठा व्यसनपराङ्मुखी शास्त्राध्ययनप्रसक्ता आत्मचिन्तिकाविवेकेन कार्यं कुर्वाणाऽऽत्मप्राप्तिरेव स्वजीवनोद्देशं मुख्यतया स्वीकुरुते सा पूर्वोक्तबलत्रयप्रवृद्धा ज्ञातव्या ॥

(*b*) The possibilities of training and of educative influence in directing the individual to the recognition and appreciation of the spiritual realities underlying all manifestations of life.

## सू०-सर्वयोनिष्वात्मशिक्षाप्रभावात् ॥ १८ ॥

भा०-शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः । तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ मनोपि न तथा ज्ञानाद्यध्यक्षं तदा भवेत् । आत्मेन्द्रियाद्यधिष्ठाताकरणं हि सकर्तृकम् ॥ इति चेतनेष्वात्मावश्यमङ्गीकार्यः । अचेतनेष्वपि स्थावरेष्वेकेषु वृक्षादिषु एकस्यामवस्थायां वृद्धिह्रासदर्शनादन्यस्यां शुष्कछिन्नाद्यवस्थायां न तथादर्श

नादात्मसत्ता तत्संयोगवियोगौ च स्वीकार्यौ। पाषाणादिष्वपि सूक्ष्मविचारेण योगिदृष्ट्या वानुभवशक्तिदर्शनात्तत्राप्यात्मसत्ता स्वीकार्या॥ तस्यात्मनः शक्तेर्वृद्धिह्रासावेव प्रशंसानिन्दास्पदौ भवतः। प्राधान्येन-यदुक्तं विश्वामित्रेण-धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम्। एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे॥ तस्य चात्मनो बलोदयो ज्ञानेन अज्ञानेन च ह्रासः। ज्ञानञ्च शास्त्राध्ययनेन धर्मसेवनाद्वा भवति। अज्ञानञ्चापि शास्त्रपराङ्मुखतया मौढ्येन पापाचरणाद्वा वर्धते। शास्त्रानधीत्यापि तदनुष्ठानराहित्येनाप्यज्ञानमेव वर्धते न ज्ञानं वस्तुतः। आत्मिकबलोदयेनैव महापुरुषा महर्षयो महर्षिकल्पाश्च जगति धर्मप्रवर्तका जाता अद्यत्वे च पूज्यन्ते। प्रभाते रामः स्मर्यते न रावणः युधिष्ठिरः स्तूयते निन्द्यते च दुर्योधनः। कृष्णो गीयते तिरस्क्रियते च कंसः। एवमेव जात्यन्तरेष्वपि बहुलौ दृश्येते तत्र कारणमात्मिकबलस्य वृद्धिह्रासावेव नान्यत्-अथापि पक्षिषु गरुडः पशुषु गौः अश्वत्थो वृक्षेषु पर्वतेषु च हिमालयः, आत्मिकबलप्रभावेणैव शस्यते इति सर्वमनुजैरात्मबलोद्रेकायैव सदा शास्त्राध्ययनेन धर्मसेवनेनात्मचिन्तनेन च यत्नः कार्यः परिहर्तव्यश्चाज्ञानं शास्त्रपराङ्मुखतया पापाचरणेन वा जायमानम्, एवं सर्वत्रात्ममहत्त्वशिक्षयात्मज्ञानप्रवृत्या सा जायते॥

(*c*) The need of the deliverance of man from the blindness and tyranny of individual collective national egoism.

सू० अभिमानान्धतयात्याचारस्तत्प्रतिबन्धकः ॥१९॥

भा०-तृणानि नोन्मूलयति प्रभञ्जनो मृदूनि नीचैः प्रणतानि सर्वतः॥ समुच्छ्रितानेव तरून् प्रबाधते महाभिमाने फलमेव नाशनम्। मान्धाता च महीपतिः कृतयुगालङ्कारभूतो गतः। सेतुर्येनमहोदधौ विरचितः क्वासौ दशास्यान्तकः। अन्येचापि युधिष्ठिरप्रभृतयो याता दिवं भूपते! नैकेनापि समंगता वसुमती मन्ये त्वया यास्यति॥ रावणस्य क्व सा लङ्का क्व च कंसस्य सा पुरी। अभिमानेन पापस्य फलमेवं स्फुटं भवे॥ अथापि महामत्तः सद्गुरून् न सेवते ततो शास्त्राणिनाध्येति। अभिमान भङ्गभयात् कौपीनानां ब्रह्मवेदिनां सत्सङ्गेनात्मतत्त्वं न जानीते किन्त्वहङ्कारबाहुल्येनोच्छृङ्खलः सन् पापबाहुल्ये तस्य विनाशं तनुते जात्यभिमानमत्तोऽपि समदृष्टिर्न भवति सर्वं ब्रह्ममयं जगत्समतया नाङ्गीकुर्वन् रागद्वेषभाग् भवति इति ब्रह्मजिज्ञासुना कदापि कीदृशश्चाभिमानं न कार्य्यम्॥

(*d*) The need of inspiring the individual and the race with great ideals of service. in order that freedom may be sought, not in material possessions but in freedom from the bondage of the

senses and from the bondage of all things that have power to hinder the free expression of the higher self in service.

## सू० परोपकारमहत्त्वोपदेशात् ॥ २० ॥

पिबन्ति नद्यः स्वयमेव नोदकं धाराधरो वर्षति नात्महेतवे । स्वयं न खादन्ति फलानि वृक्षाः परोपकाराय सतां विभूतयः ॥ मूले भुजङ्गैः कुसुमानि भृङ्गैः शाखाप्लवङ्गैर्विटपे विहङ्गैः । आश्चर्य्यमेतत् खलु चन्दनस्य परोपकाराय सतां विभूतयः ॥ रत्नाकरः किं कुरुते स्वरत्नैः विन्ध्याचलः किं करिभिः करोति । श्रीखण्डखण्डैर्मलयाचलः किं परोपकाराय सतां विभूतयः ॥ कर्णो कर्णो बलीराज्यं जीवं जीमूतवाहनः । ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ अष्टादशपुराणेषु व्यासस्य वचनद्वयम् । परोपकारः पुण्याय पापाय परपीडनम् ॥ धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् । सन्निमित्ते वरं त्यागो विनाशे नियते सति ॥ यदि नित्यमनित्येन निर्मलं मलवाहिना । यशः कायेन लभ्येत तन्न लब्धं भवेन्नु किम् ॥ श्रूयतां धर्म्मसर्वस्वं श्रुत्वा चैवावधार्य्यताम् । आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ इत्यतो मनुजो जातिश्च-परोपकरणं कार्या दसारात्सारमहरेत्सदा । परोकरणे धर्म्मसेवायाश्च प्रतिद्वन्द्विनः सांसारिकपदार्थबन्धनविषयबन्धन-स्त्वन्तर ममतादयस्ते सदा दूरतः कार्य्याः । पदार्थबन्धनञ्च तत्कार्य्यं व्यग्रतार्थमावेदयति स्वार्थात् कुत्रान्यत्र चेष्टहानि भयात्परोपकारे विघ्नाय भवति विषयबन्धनञ्चेन्द्रियाणि विषयेषु नियोजयन् परोपकाराय नादिशति । वस्त्वन्तराणां ममतापि स्वार्थायैवाह्वयति न परार्थाय इति मनुष्येण सर्वबन्धनेभ्यः पूर्णसन्यासिना भूत्वा यथायथं कर्म्मानुष्ठानेन परोपकारः परोधर्म्मः सदा सेव्यः येन संसारमुपकुर्वन्नन्ते स्वयमपि मोक्षमाप्नुयात् । इति परोपकार महत्त्वापदेशादपि साध्यात्मिकोन्नतिर्जायते ॥

(e) The need for the individual to live at all times true in word and thought and feeling to the highest he knows.

## सू० वचनचिन्तनानुभवेषु चैक्यात् ॥ २१ ॥

भा०-मनस्यन्यत् वचस्यन्यत्कर्मण्यन्यत् दुरात्मनाम् । मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् । अपि वा ब्रह्मविद्याविद्यार्थिने सर्वं ब्रह्ममयं जगदिति समदृष्ट्या सर्वत्र समत्रा पूर्वं साधिता परं यदि स स्ववचनचिन्तनानुभवेष्वेव भिन्नोऽन्यत् कथयति चिन्तयति अनुभूते चान्यदेव तदा कथमखिले जगति समदृष्टिः स्यात् किन्तु वचनचिन्तनानुभवेषु भिन्नः वञ्चनापापेन लोकस्य हानिं कुर्वन् पापाय जायते का गणना तस्याध्यात्मिकोन्नतेः परं यदि स वचनचिन्तनानुभवेषु समो भवति तदा सत्य-

परमधर्मपालनेन लोकानुपकुर्वन् स्ववचनचिन्तनानुभवेषु समतामभ्यसन्नखिलेभवेऽपि समदृष्टिर्भवितुमर्हति येन तस्याध्यात्मिकोन्नतेः परा काष्ठा भवतीति वचनचिन्तनानुभवेषु चैक्यात्साध्यात्मिकोन्नतिर्जायते ।

(*f*) The need for the individual to realise the Fatherhood of God—as the basis of the brotherhood of all men—and his own essential nature as a spiritual being with a latent or a present consciousness of the immanent guidance, strength and inspiration of a supreme Reality.

**सू०-ईश्वरस्य सर्वपितृत्वस्य स्वात्मनोऽध्यात्मरूपस्य ईश्वरस्यप्रबलप्रेरकत्वस्य शक्तेरुत्तेजनस्य चानाविर्भूताविर्भूतबोधानुभवात् ॥ २२ ॥**

येन जातं जगत्सर्वं यस्मिन्नेव विलीयते । येनेदं धार्यते विश्वं तस्मै ज्ञानात्मने ॥ इत्युक्तदिशा परस्परप्रेमातिशयाय सर्वभ्रातृभावाय च जगदीश्वरजनकतयाः । नाहं भूतगणोदेहो नाहमक्षगणस्तथा । एतद् विलक्षणः शुद्धो निर्मलोध्यात्मसंज्ञकः–इत्याध्यात्मविवृद्ध्यर्थं स्वाध्यात्मरूपबोधस्य, जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः । केनापि भूतेन हृदि स्थितेन यथा प्रयुक्तोऽस्मि तथा करोमि । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।

इति तस्यैवेश्वरस्य प्रेरणाऽस्माकं शुभाशुभकर्मसु परं कारणमिति निश्चित्य तस्यैव सर्वकार्येषु आधारः आधार्य इति ज्ञानात् न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकीज्ञानबलक्रिया च इति तस्यशक्तिमहत्त्वबोधात् । स उ ह्येव साधु कर्म कारयति यं यमेभ्यो लोकेभ्य ऊर्ध्वमुन्निनीषते ॥ स उ ह्येवासाधुकर्मकारयति यं यमेभ्यो लोकेभ्योऽधोनिनीषते इति शुभाशुभकर्मसु तस्यैवोत्तेजनं परमसाधनमिति बोधादीश्वरं सर्वजनकं मत्वा भ्रातृभावेन स्वात्मनोध्यात्मरूपबोधेनाध्यात्मकर्मप्रसृत्या शुभाशुभकर्मप्रवृत्तौ ईश्वरप्रेरणाया उत्तेजनस्य च परमावश्यकताबोधेन तस्यैव सर्वत्राधार ग्रहणात् तस्यैव शक्तिर्निखिलं निखिलं कार्यं कुरुते न तां विना किमपि किमपि कदापि इति बोधात् परमे कार्ये आध्यात्मिकोन्नतिरूपे तस्य शक्तेराधाराश्रयणात् साध्यात्मिकोन्नतिर्जायते एतद्बोधश्च महर्षिवाल्मीकिप्रमृतिषु पूर्वमनाविर्भूतः पश्चात्संगेन चाविर्भूत इत्याविर्भूताद्नाविर्भूताद् वा सा तस्मादेव जायते ॥

